# श्रीवाजसनेयि-माध्यन्दिन-
# शतपथब्राह्मणम्

# THE ŚATAPATHABRĀHMAṆA

## ACCORDING TO THE MĀDHYANDINA RECENSION



श्रीवाजसनेयि-माध्यन्दिन-

# शतपथब्राह्मणम्

श्रीमत्सायणाचार्यविरचित-
वेदार्थप्रकाशाख्यव्याख्यासमेतम्
उपयुक्तभाष्यानुपलब्धिस्थाने
श्रीहरिस्वामिभाष्यसमेतम्

"प्रथमखण्डात् पंचमखण्डपर्यन्तं"



द्वितीयोभागः
तृतीयचतुर्थपञ्चमकाण्डात्मकः







ज्ञानपब्लिशिंगहाउस
देहली-११०००२ (भारतम्)

ज्ञानपब्लिशिंगहाउस
देहली-११०००२ (भारतम्)

प्रथमं पुनर्मुद्रणं १९८७ तमे वर्षे

भारते मुद्रितम्

इदं पुस्तकं ज्ञानपब्लिशिंगहाउस कृते गायत्रीगर्गमहाभागया
देहली ११०००२ तः प्रकाशितम् तथा गोयलआफसेटमुद्रणालय
देहली ११००३५ तः मुद्रितम् ।

# THE ŚATAPATHABRĀHMAṆA

ACCORDING TO
THE
MĀDHYANDINA RECENSION
WITH
THE VEDARAPRAKĀŚA BHĀṢYA
OF
SĀYAṆĀCĀRYA
SUPPLEMENTED BY THE COMMENTARY
OF
HARISVĀMIN




VOLUME II
CHAPTERS 3-5





**GIAN PUBLISHING HOUSE**
4-C Ansari Road Daryaganj, New Delhi - 110002

# माध्यन्दिनशतपथब्राह्मणगतविषयानुक्रमणिका ।

## तृतीयेऽध्वरकाण्डे—

ब्रा॰ विषयाः — पृष्ठाङ्काः

### अथ प्रथमोऽध्यायः ।

### अथ ज्योतिष्टोमयागः ।

१ आदौ शालानिर्माणप्रभृति—दीक्षा-इतिपर्यन्ताग्निष्टोमेतिकर्तव्यता-विधानं तत्र पूर्वं शालानिर्माणार्थं देवयजनपरिग्रहः, तत्रापि समन्तो-दक्पूर्वप्रवणत्वादिधर्मविशेषानु-कथनं, देवयजनप्रादेशे परिमित-प्रदेशाधिक्यस्य निषेधः, कर्षणा-माख्यानमुखेन देवयजनस्य प्राचीन-वंशत्वानुगतं पक्षान्तरविधानं, प्रसंगाद्दीक्षितस्य शयनविषयक-नियमविधानं, वृष्ट्यादिपरिहाराय सर्वतः परिश्रयणविधानं, तत्र-अत्रैवर्णिकानां शूद्रादीनामभिप्राप्ति-निषेधः, दीक्षितस्य सर्वैः सह वाग्व्यवहारस्य निषेधः, समंत्रक-शालाप्रवेशकथन तन्मंत्रव्याख्यानं चेति. १-६

२ दीक्षासंस्काराः—तत्र पूर्वमप्सुदीक्षा तस्यां च दीक्षाकालविधानं, दीक्षि-तस्याशनविषये सर्वान्नाभ्यनुज्ञानं, शालोत्तरतः क्षौरार्थं परिश्रयण-विधानं, सर्वाङ्गवपनपक्षस्य निरा-करण, सकर्म सप्रकारकं समंत्रक वपनविधान, वपननिमित्ताशुद्धि परिहर्तुं सप्रकारकं स्नानविधानं, सार्थवादं प्रासङ्गिकपुरुषार्थनियम-सहितं समंत्रकमहतवासःपरिधान-विधान, क्षौरानंतरं स्नातस्य धृत-वाससो दीक्षितस्य शालाप्रवेश-विधानम्, अत्रावसरे सोमदधिकमशन-विषयकनियमानुकथन चेति. ६-१३

३ अनःप्रगमन कृत्वा दीक्षाङ्गभूताया आग्नावैष्णवेष्टेः प्रयोगविधान, तत्र च स्वसमृद्धिकल्पकामस्यादित्यचरो-वैकल्पिक विधान, तत्प्रसङ्गेन मार्त-ण्डस्योत्पत्ति., सामिधेनीनां सप्त-दशत्व—प्रयाजानां पञ्चसंख्याकत्व-अनुयाजानां त्रित्व—पत्नीसंयाजा-नामस्तित्व—समिष्टयजुषोऽभावये-त्यादिप्रयोगगतविशेषकथनं,ततो-दीक्षितस्य सार्थवादं सोपक्रमोप-संहारं स्वधर्मक नवनीताभ्यञ्ज-विधानं,पौर्वापर्यक्रमसहित सत्साधन सार्थवाद समन्त्रकं त्रैककुदेनाञ्जनो-पाञ्जनविधान, समन्त्रक दीक्षितस्य दर्भैः पावनविधान, तन्मन्त्रव्याख्या-नं च, आशीराशंसनं, सप्रकारक हस्तद्वयेऽप्यङ्गुलीनां न्यञ्चनं तत्सा-धनमंत्रव्याख्यानं च, दीक्षाकृत्यर्थं शालाप्रवेशनविधानं चेत्यादि. १३-२४

४ एवं दीक्षासंस्कारकरणानन्तरमौद्ग्र-भणसंज्ञकानां पञ्चानां दीक्षाहुतीनां विधानम्,एतासामुद्ग्रहणसाधनताया निमित्तपूर्वकं प्रशंसनं, पुरातनवृत्ता-न्तप्रदर्शनमुखेनैतेषां स्वर्गोद्ग्रहण-साधनतया उपपादनं, तद्गतपञ्च-संख्यायाः प्रशंसन, होममंत्र-

इति षष्ठोऽध्यायः ।

इति नवमोऽध्यायः ।

इत्यध्वरनामकं तृतीयं काण्डम् ॥



इत्यथ उपवसथनादि सत्रोत्थानम् ।

इति षष्ठोऽध्यायः ।

इति चतुर्थं ग्रह काण्डम् ॥



इति प्रथमोऽध्यायः ।

## अथ द्वितीयोऽध्यायः ।

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

स्वादिगुणविशेष विधाय तत्र गर्तस्य पितृलोककामना प्रशंसन, यूपस्य चोऽ-कप्रासपरिणामापवादाय परिमाणान्तर-विधान, नेष्टृकर्तृक सार्थवादं सप्रकारक सोपपत्तिक पत्न्याः कौशवास परि-धापनविधानम्, यूपे आरोहणार्थनिश्र-यणीस्थापन विधाय पूर्वोक्तपक्षाभ्यां यूपारोहणप्रकारविषयकसिद्धान्तोपवर्गनं अन्वयव्यतिरेकाभ्यां जायासहितस्य पुंसः सम्पूर्णावयवत्वप्रतिपादनपुरःसर यूपारो-हणकाले जायाया आमन्त्रण विधाय तत्र मंत्रस्य विनियोजन, सार्थवाद गोधूम-मयचषालस्पर्शनस्य समन्त्रक विधान, यूपमतीत्य शिरस उद्गमनस्य मरुतं समन्त्रक विधान, यूपेऽवस्थितस्य यज-मानस्य सर्वासां दिशां समंत्रक विधान, सप्तदशाश्वत्थपत्रोपनद्धानामूषपुटाना वैश्यकर्तृक समंत्रक सकारण सार्थवाद-मुत्क्षेपणविधान, बृहस्पतिदृष्टान्तेन प्रशंसनपुरःसरं तत्रैव यजमानस्य मित्रत्वप्रयोजनाय समत्रकं भूम्यवेक्षण-विधान, यूपाद्धिरण्ये रुक्मोत्तरे वस्ताजिने बस्ताजिनोत्तरायामौदु-म्बर्यामासन्द्यां वाऽवरोहणस्य सप्रकारक सार्थवाद विधानम्, आसन्दयां बस्ताजि-नास्तरणे साभिप्राय मंत्र विनियुज्य तस्यां मंत्रमंत्रार्थसहित यजमानस्योप-वेशनविधान चेत्यादि. ४६–५६

२ नैवारचरो प्रचरणविधानं, वाजप्रसवीय-होमं विधानुं तत्काल प्रतिपाद्य होमार्थ-मन्नसम्भरणविधानम्, अन्नसम्भरणाय पात्रविशेषस्य विधानपूर्वकमन्नसम्भरण-विधानम्, अन्नसम्भरणे सोपपत्तिको सप्त-दशान्नसख्यां पूर्वपक्षयित्वा तौ निराकृत्य च यथोपरमार सर्वान्नसम्भरणपक्षस्वधार-णम्, तत्रापि एकान्नसम्भरणनिषेधकथन च, असम्भ्रियमाणान्नविषये किञ्चिद्वि-शेषविधानं, सम्भृतान्नेन सप्तदशाना वाजप्रसवीयमन्त्राहुतीनां सप्रकारक समन्त्रक होमविधान, हुतशेषान्नस्य यज-मानाशाभिषेककरणत्वेन विनियोग प्रदर्श्य तत्र मत्र विनियुज्य च मन्त्रे पूर्वोत्तरपक्षाभ्यां परमत प्रत्याख्याय स्वमतं प्रतिष्ठाप्य चोहप्रकारकथनं, साभिप्रायं त्रिः कृत्वाऽऽवेदनविधानम्, उज्जयतिर्ह्रुतैर्मन्त्रैः. सप्तदशानामुज्जिति-सञ्ज्ञाहुतीनां होमविधानं विकल्पेन यजमानाय वाचनविधान वा, उभयत्र विद्यमानमत्रगतसप्तदशसख्यायाः प्रजा-पत्यात्मना प्रशसन, चोदकप्राप्तस्य स्विष्टकृद्यागादिकस्यानुसन्धानकथन, स्विष्टकृत्समनन्तरभाविना कर्मणामनुष्ठान-कथनम्, एवं कर्मसुजितिवाचना-नन्तरं माहेन्द्रग्रहण स्तोत्रशस्त्रे च कृत्वा स्विष्टकृदादिकं यजमानस्य पश्चादव-रोहणं कर्तव्यमिति कस्यचिन्मतमनूद्य तद्दू-षयित्वा चतुष्पदमुक्त एव पक्षः श्रेया-निति स्वमतप्रतिष्ठापन चेत्यादि. ५७–६६

इति वाजपेययागः ।

१ अथ राजसूययागः–तत्रापि राज-सूयाङ्गभूते पवित्रनामके प्रथमसोमयागे दर्वे कर्तव्यस्य पूर्णाहुतिप्रभृतिविशेषविकोत्तर-तन्त्रस्य विधान, तत्रापादौ सर्वा कामनायां सेतिकर्तव्यताकं सदक्षि-णाक पूर्णाहुतिहोमविधानम्, आरम्भ-णीयस्थानीयात्पवित्राख्याद्ग्निष्टोमादूर्ध्वः

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|
| मरीचीगतानामपां चैतेनामापां सार्थवादग्रहणविधान, सम्भृतानामपां समद्रासद्यां प्रजापत्यामना प्रशस्य सरस्वतीप्रभृतिमरीच्यन्तानामपामाहृतानां च संख्यां समस्य तस्याः प्रजापत्यामना प्रशंसन, होमपूर्वकमपां ग्रहणस्य प्रशंसन, सारस्वतीमारोचीनां ग्रहणे होमस्याभावे कारणाभिधान, पृथक्पृथक्पात्रे गृहीतानामपां सम्भूर्कसमिन्द्रोदुम्बरे एव पात्रे समवनयनस्य समन्त्रकं विधान, मन्त्रतद्याख्यानसहितं संसृष्टानामपां मैत्रावरुणधिष्ण्यस्य पुरोदेशे सादनविधान चेत्यादि. | १०९–१२० | ........नुविधानम्, उत्पवनमनूद्य मन्त्रस्य सार्थवादनिर्देशं विधान, उत्पवनमन्त्रस्य मागशोऽनूद्य साभिप्राय व्याख्यानम्, अभिषेचनीयेषु पात्रेष्वेतासामपां समन्त्रकमालेचन विधाय तन्मन्त्रस्य प्रतिपदमनूद्य व्याख्यानं, यजमानाय तार्प्यपाण्ड्वाधिवासोष्णीषाणां वाससां तन्मन्त्रैः सप्रकारकं सहेतुकं परिधानविधान, तत्रोक्तस्योष्णीषस्य पूर्वदेशेऽवगूहनं द्रढयितुं पूर्वपक्ष सोपपत्तिकमनूद्य त दूषयित्वा सकारण स्वमतस्य प्रतिष्ठापन, तार्प्यादिवासःपरिधानस्य समुचित्य प्रशंसन, पूर्वं निहितस्य दीक्षितवसनस्य परित्यागविधिसया केषाञ्चिन्मतेनैतेषा परिधानानां तार्प्यादिवाससा विसृज्यान्यत्र निधान तदाक्षेपि दीक्षितवसनस्य पुनः परिधापन च पूर्वपक्षयित्वा सहेतुक तदुभयस्य दूषणं, विहितस्य दीक्षितवसनस्यावभृथे प्रासन विधाय तेषां वाससां दानकालविधान, समन्त्रक धनुष आननविधानं, तस्य धनुषः कोट्योः समन्त्रक विमार्जनविधान, समन्त्रकधनु. प्रदान विधायैषुत्रयप्रदानविधा तेषामिषूणां लोकत्रयात्मत्वेन प्रशसन लक्षणमद्वयो. कथन च, इषुत्रयदानमनूद्य साभिप्रायं मन्त्रस्य विनियोजनं, यजमानायाविद्धिकमन्त्राणां वाचनविधानं चेति. | १२१–... |
| ९ अभिषेकः–माध्यन्दिनसवने माहेन्द्रग्रहग्रहणात्प्राक्तनक्षणलक्षणकालविशिष्टस्य यजमानाभिषेकस्य सार्थवाद विधान, मैत्रावरुणधिष्ण्यस्य पुरोदेशे समन्त्रकं व्याघ्रचर्मास्तरण विधाय तस्य सोपपत्तिविस्तव्याख्यायिकयोपपादनम्, अभिषेकस्य पुरस्तात्पश्चाच्च हूयमानानां पार्थहोमानां समन्त्रक सार्थवाद विधानं तेषा संख्याभावतो सार्थवाद विधान च, अभिषेकस्य पुरस्तात्कर्तव्यहोमसमनूद्य सवाणां सार्थवाद सविशेष विधानम्, अभिषेकस्य पश्चात्कर्तव्य होमस्यनूद्य तत्पत्रणां सार्थवाद सविशेष विधानम्, अभिषेचनीयानां पात्राणामासादनदेशविधान, तेषां पात्राणामभिषेकृवर्गविशेषेण पालाशादिवृक्षकाष्ठविशेषत्वस्य सोपपत्तिक विधान, पवित्रकरणं विधाय तदर्थवादस्यातिदेशकथनं च, तयोर्दर्भमयोर्हिरण्यग्रथन विधाय ताभ्यां पवित्राभ्यामुत्प- | | इति तृतीयोऽध्यायः ।<br>अथ चतुर्थोऽध्यायः ।<br>१ सदसो मध्ये उपविष्टस्य केशवस्य पुरुषस्य मुखे समन्त्रकं सार्थवादं ताम- | |

| क्रा० विषयाः | पृष्ठाङ्काः |
|---|---|

| नामानि | अ. ब्रा. क. |
|---|---|
| **चतुर्थकाण्डे–** | |
| अङ्गिरः | ४ । ९ । २० इत्यादि. |
| अच्छावाक्. | ३ । १ |
| अत्रि | ३ । ४ । २१ |
| आत्रेयः | ३ । ४ । २१ |
| आश्वतराश्वि. ( वैयाघ्रपद्य ) | ६ । २ । ९ |
| उक्थ्यग्रह | २ । ३, ३ । ३ । २ |
| उन्नेता | ४ । ३ । ८, ९ । ८ । १३ |
| क | ५ । ६ । ४ |
| कुरुक्षेत्रम्. | १ । ५ । १३ |
| कौसुम्त. ( कउक्पस्त ) | ६ । १ । १३ |
| गवामयनम् | ६ । २ |
| ग्रावस्तुत् | ३ । ४ । २२ |
| च्यवनभार्गव ( आङ्गिरस ) | १ । ५ |
| तुथ. | ३ । ४ । १५ |
| तृतीयसवनम् | ३ । ५, १ । १ । १२ |
| दध्यङ् ( आथर्वण. ) | १ । ५ । १८ |
| द्यावापृथिवी. | ४ । २ । १३ |
| नेष्टा. | ४ । ३ । १७–१८ |
| पथ्या स्वस्ति | ५ । १ । ३–४ |
| पर्वत | ६ । ९ । १४ |
| प्रतिहर्ता. | ३ । ४ । २२ |
| प्रातःसवनम् | २ । ३ । २, १ । १ । ८ |
| बुडिल ( आश्वतराश्वि. वैयाघ्रपद्य ) ( ऋषि. ) | ६ । १ । ९ |
| ब्राह्मणाच्छंसी. | ६ । ६ । ५ |
| मनोता | ५ । ३ । ८ |
| मन्थिग्रह | २ । ६, २ । १, ३ । ३ । २ |
| महाशालश्च ( ब्राह्मणौ ) | २ । १ । ४ |
| महावैश्वदेवग्रह | ४ । १ । २१ |
| माहेन्द्रग्रह | ३ । ३ । १६–१७ |
| मैत्रावरुण | १ । ५ । १९, १ । ४ |
| माध्यन्दिनसवनम् | ३ । १७, ६ । १ । १०, ६ । ८ । ७ |
| राम औपतस्विनिः ( ऋषि ) | ६ । १ । ७ |
| वाचस्पतिः | १ । १ । ९ |
| वैश्वदेवग्रह | ३ । १ । २५, ४ । १ । ८ |
| वैश्वदेवशास्त्रम् | ४ । १ । ११ |
| वैश्वानरग्रहः | २ । ४ । १ |
| शण्डामर्कौ ( राक्षसौ ) | २ । १ । ४ इत्यादि. |
| शर्यातः ( मानव. ) | १ । ५ । २ इत्यादि. |
| श्वेतकेतु. ( औद्दालकिः ) | २ । ५ । १५ |
| सुकन्या ( च्यवनर्षेः पत्नी ) | १ । ५ । ६ |
| हरिवान् ( इन्द्र. ) | ५ । ३ । ४ |
| होत्रक. ( मैत्रावरुणो, ब्राह्मणाच्छंसी, अच्छावाक् ) | ३ । ३ । १२ |
| इति । | |
| **पञ्चमकाण्डे–** | |
| अनुमतिः | २ । ३ । २, ९ |
| अग्नाविष्णू. | २ । ३ । ६, २ । ५ । २ |
| अग्निनेत्राः ( देवा. ) | २ । ४ । ६ |
| अग्निपूषा. | २ । ५ । ५ |
| अग्नीषोमौ. | २ । ३ । ७, २ । ५ । ९–१०, ३ । ३ । १ |
| अच्छावाक् | ४ । ५ । २२ |
| अर्जुन ( इन्द्र ) | ४ । ३ । ७ |
| अर्यमा. | ३ । १ । २, ५ । १ । १२, ३ । ५ । ९ । |
| अश्व | ३ । ५ । ९ |
| आग्नि | ५ । ५ । १४ |
| आग्नीध्र ( अर्थात् ) | ४ । ५ । २२, ५ । १ । ८, १८ |
| आग्नीध्रीय | ४ । २ । १० |
| इन्द्र-पूषा. | २ । ५ । ५ |
| इन्द्रासोम | ३ । ५ । ९ |
| इन्द्रतुरीयम् ( हविः ) | २ । ४ । ११, १३ |

इति विशिष्टनाम्नां सूची ।



इति
शतपथब्राह्मणस्य विशिष्टनाम्नाम्
अकाराद्यनुक्रमेणातृतीयपञ्चमकाण्डान्ता
सूची
समाप्ता ॥

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## तृतीयं काण्डम् ३ ।

१०–गुदम्–अत्र गुदशब्देन सूक्ष्मं मलागारं येन शकृन्निर्गच्छति तस्य मध्य विषमो मध्यमो भाग । ( लोके 'पोर्त्याई ' इति ख्याते ) ॥

११–दक्षिणा श्रोणिः–दक्षिणस्य पश्चात्पादस्योपरिवर्तमानो मांसल प्रदेश कटिशब्दवाच्य । " कटो ना श्रोणिफलक कटि श्रोणि ककुद्मती ' इत्यमर । ( लोके ' कातिगणीचा पडदा ' इत्युच्यते ) ॥

एवमेकादशावदानानि जुहूसम्बन्धीनि प्रधानयागसाधनानीत्यर्थ ।

## इति जौह्वानि ।

## अथौपभृतानि ।

१–दक्षिणसक्थि पूर्वनड्वकं–दक्षिणस्य बाहो पूर्वनड्वकं असादघोवर्तमान जानूपरिभाग. । ( लोके ' चापु ' इति ) ॥

२–गुदतृतीयाणिष्ठं–गुदस्य तृतीयो विषमो भाग सूक्ष्मोऽतिह्रस्व । इति ॥

३–सव्याश्रोणिः–सव्यस्य पश्चात्पादस्योपरिवर्तमानो मांसल. प्रदेश कटिशब्दवाच्य. । ( लोके ' कातिगणीचा पडदा ' इति प्रसिद्धम् ) ॥

एव त्रीण्यवदानानि उपभृत्सम्बन्धीनि स्विष्टकृद्यागसाधनानीत्यर्थ. ॥

## इत्यौपभृतानि ।

## अथान्यान्यवदानानि ।

१–वनिष्ठुं–गुदस्य वनिष्ठो भागस्तृतीयो विषम स्थूलभाग उपयष्टुरुपयष्टोमार्थ. ॥

२–वनिष्ठु–स्थूलान्त्र, इति कर्कानन्तदेवयाज्ञिका । शतपत्रकमिति राम. । ( चुत्ता ' इति लोके प्रसिद्धम् ) ॥

परन्तु तस्य स्थान केनापि नोपदिष्टमतः सविशेषलक्षण स्थानमुच्यते । अत्रशब्दो गुदैकदेशो गुदपर्यायवाचक एव । स्थूलान्त्र स्थूलतर गुदं मलागार, तत्स्थान तु अपानरन्ध्रलग्न ज्ञेयम् । उपरिभागे मृदुलघुतरपरिमितमत्स्यै श्वेतपर्णमहीरुत्पर्यैर्युक्त श्वेतपर्ग सरन्ध्र सपुरीष, अपानरन्ध्रप्रदेशाद्धृदयस्य वनिष्ठभागपर्यन्त यावदीर्घ रज्जुरूप प्रायो हस्तमात्र लम्बायमान स्थूलान्त्र वनिष्ठु इत्यभिधीयते । तद्वनिष्ठुभागमपानरन्ध्रतो गुदवनिष्ठभागप्रदेशाद्वापच्छिद्य तद्रन्ध्रे अलामेकेन त्रिपुरीष कृत्वा तदुक्तस्वरूप बोधयेत् । एतद्वनिष्ठु भागप्रच्छेदस्थानतो मलागारग्रन्थिपर्यन्त प्रागुक्तत्रिविधो गुदभाग इति विवेक ॥

३–जाघनी–जघनप्रदेशे भवा जाघनी प्रसिद्धेति कर्क. । जघनप्रदेशे पुच्छमूलग्रा इति श्रीअनन्त. । पशोः पुच्छकाण्डमिति देवयाज्ञिकसिद्धान्त । ( लोके ' दुमगजा ' इति प्रथिता ) ॥

४–क्लोमा–सरन्ध्रा गलनाडिका इति कर्क । क्लोमा–उदर्यो जलाधारः । ' हृदयस्य दक्षिणे यकृत् क्लोमा, वामे प्लीहा पुप्फुसश्च ' इति वैद्य. क्षीरस्वामी । एवमेव उवटमहीधराभ्यामपि व्याख्यातम् । " तिलक क्लोम " इत्यमरश्च । कर्कादिमते क्लोमन्शब्द पुमाकारान्तश्च । अमरसिंहमते तु क्लीबो नान्तश्चेति । ( लोके–' गलनाडी पुप्फुस ' इति प्रख्यात ) ॥

५–प्लीहा–गुल्मिकाकार हृदयदक्षिणभागस्थ कृष्णमांसम् । हृदयवामभागे शिथिलो मांसभाग. पुप्फुलसंज्ञक इत्युवटमहीधरौ । प्लीहाशब्दोऽपि पुमाकारान्तश्च । " गुल्मस्तु प्लीहा पुंस्यपि " इत्यमरात् ॥

६–अभ्यूभी–उरःप्रदेशास्योपरि भवतीति कर्क । उरस उपरि सनपुटः प्रसिद्ध इति श्रीअनन्तः । अभ्यूबी

स्तनपुट इति वा कर्के. । मम्प्री लिव्हमिरी इति. । एतदेव गृह्यते याज्ञिकैः । ( तत्र लोके 'वाला शिप' इति प्रसिद्धम् ) ॥

७-पुरीतत्–हृदयस्य प्रच्छादकं कौसुम्भवर्णं मांसम् । ( 'पडदा' इति लोके निगद्यते ) ॥

इत्यन्यान्यवदानानि ।

तत्रैतेष्वङ्गेषु हृदय सनगा कृत्वा अध्वर्यवे समर्पयेत् । तत्राध्वर्युरवदानद्वयं जुह्वां अवदानद्वयमिडापात्र्यां, अवदानद्वयं च प्राशित्रे कृत्वा अवशिष्टं सम्मर्शनार्थं रक्षेत् । एवं जिह्वा क्रोडं षष्ठं वृक्कौ च सव्यसक्थिपार्श्वे दक्षिणश्रोणी इत्येतेषामिडायां न । गुदतृतीयं द्वेधा कृत्वा जुह्वाम् । दक्षिणसक्थ्यवदानद्वयमुपभृति । गुदतृतीयं द्वेधा कृत्वा च, सव्यश्रोणेरवदानद्वयं चोपभृति । अवशिष्टं सम्मर्शनार्थं स्थापयेत् इति ॥

## अथोक्तविवेकप्रदर्शककोष्ठकानि ।

### अथ जौहवकोष्ठकम् १ ।

| | जौहवानि | हृदय | जिह्वा | क्रोडं | स.न. | पार्श्वे. | यकृत् | वृक्कौ | गुद | द.श्रो. | सकलनं. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | जुहूः | २ | २ | २ | २ | ४ | २ | ४ | २ | २ | २२ |
| २ | प्राशित्रहरणे. | २ | २ | २ | २ | ४ | २ | ४ | ० | २ | २० |
| ३ | इडापात्री. | २ | २ | २ | ० | ० | २ | ४ | ० | ० | १२ |
| ४ | शेषः | १ | १ | १ | १ | २ | १ | २ | ० | १ | १० |
| | संकलनया. | ७ | ७ | ७ | ५ | १० | ७ | १४ | २ | ५ | ६४ |

इति जौहवानि ।

### अथौपभृतकोष्ठकम् २ ।

| | औपभृतानि. | द. न. | गुद | स. श्रो. | संकलनं |
|---|---|---|---|---|---|
| १ | उपभृत | २ | २ | २ | ६ |
| २ | प्राशित्रहरणे | ० | ० | ० | ० |
| ३ | इडापात्री. | ० | ० | ० | ० |
| ४ | शेषः | १ | ० | १ | २ |
| | संकलनया. | ३ | २ | ३ | ८ |

इत्यौपभृतानि ।

## अथांगविनियोगकोष्टकम् ३ ।

| | अंगानि. | विनियोग. | संकलन |
|---|---|---|---|
| १ | वर्षिष्ठम्. | उपपद्होमार्थं. | १ |
| २ | वनिष्ठु. | अग्नीधे. | १ |
| ३ | जाघनी. | पत्नीसयाजार्थं. | १ |
| ४ | क्लोमा. | ब्रह्मणे. | १ |
| ५ | प्लीहा. | यजमानाय. | १ |
| ६ | अध्यूध्नी. | होत्रे. | १ |
| ७ | पुरीतत्. | अध्वर्यवे. | १ |
| | | | ७ |

इत्यंगविनियोग. ।



# अथ तृतीयकाण्डे प्रथमः प्रपाठकः ।

## प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

ॐ। देवयजनं जोषयन्ते। स यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन्यदन्यद्भूमेर्नाभिशयीत ततो वै देवा दिवमुपोदक्रामन्देवान्वाऽएष ऽउपोत्क्रामति यो दीक्षते स सदेवे देवयजने यजते स यद्धान्यद्भूमेरभिशयीतावरतरऽइव हेष्टा स्यात्तस्माद्यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन् ॥ १ ॥

---

अथ ज्योतिष्टोमयागाधिकारः ।

तत्रादावग्निष्टोमे देवयजनम् ।

देवयजनं जोषयन्ते । स यदेव वर्षिष्ठं स्यात्-तज्जोषयेरन् । यद्भूमेर्नाभिशयीत । अतो वै देवा दिवमुपोदक्रामन् । देवान्वा एष उपोत्क्रामति-यो दीक्षते । स सदेवे देवजने यजते । स यद्धान्यद्भूमेरभिशयीत-अवरतर इव हेष्टा स्यात् । तस्माद्यदेव वर्षिष्ठं स्यात्-तज्जोषयेरन् ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
आधानपुनराधाने अग्निहोत्रं ततः परम् । चातुर्मास्यानि च पशुर्द्वितीये काण्ड ईरितम् ॥ २ ॥

अथ तृतीयचतुर्थाभ्यामेकाहाहीनसत्त्रलक्षणसकलसोमयागप्रकृतिभूतोऽग्निष्टोमोऽभिधित्स्यते । तत्र तृतीयकाण्डस्य प्रथमाध्याये शालानिर्माणप्रभृति दीक्षाहुतिपर्यन्तं प्रतिपाद्यते । तत्रादौ शालानिर्माणार्थं देवयजनपरिग्रहं विधत्ते-देवयजनं जोषयन्त इति । देवा इज्यन्तेऽत्रेति ' देवयजनम् ' । अधिकरणे ल्युट् ( पा. सू. ३ । ३ । ११७ ) प्राचीनवंशसदोहविर्धानादिनिर्माणपर्याप्तं देवयजनस्थानम् । तत् ' जोषयन्ते ' सेवन्ते ( धा. पा. चु. २०१ ) स्वार्थिको णिच् । परिगृह्णीयुर्यजमानपुरुषाः । तस्य विशेषमाह-स यदेव वर्षिष्ठं स्यात् तज्जोषयेरन्निति । ' सः ' इति प्रसिद्धौ यच्छब्दविशेषणमेतत् । प्रसिद्धं ' यद् ' देवयजनम्, ' तत् ' ' वर्षिष्ठम् ' अतिशयेन वृद्धम्, उच्छ्रितम्, जोषयितव्यमित्यर्थः । वर्षिष्ठमित्येतत् स्पष्टयति-यदन्यादित्यादिना । ' यत् ' यस्या उपरि गृहीतायाः ' भूमेः ' ' अन्यत् ' परिसरस्थलं ' नाभिशयीत ' अतिशयीत, अतिशयितमुच्छ्रितं न च तद् वर्षिष्ठमित्यर्थः । उक्तलक्षणं देवयजनं प्रशंसति-अतो वा इति । ' अतः ' अस्माद् यदित्युक्तलक्षणात् ' देवाः ' ' दिवम् ' ' उपोदक्रामन् ' उत्क्रान्ताः, प्राप्ताः । उत्क्रामन्तु नाम, ततः किमु ! इत्यत आह-देवान्वा इति । यस्मात् ' एषः ' दीक्षितोऽपि ' देवान् ' उपोत्क्रामति, तस्माद् यादृशेन देवयजनेन देवा दिवं गताः, तादृशं कुर्वन् ' सः ' दीक्षितः ' सदेवे ' एव ' देवयजने ' ' यजते ' इष्टवान् भवति । अनेवंविधस्य परिग्रहे दोषमाह-स यद्धेति । निम्ने देवयजने ' इष्ट्वा ' स्वयमेव ' अवरतर इव ' अत्यन्तं नीच एव ' स्यात् ' । तस्मादि-

( रंस्त ) तद्वर्ष्म सत्समᳬं स्यात् । ( तस ) समᳬं सदविभ्रᳬंशि स्यादविभ्रᳬंशिसत्प्राक्प्रवणᳬं स्यात्प्राची हि देवानां दिगथोऽउदक्प्रवणमुदीची हि मनुष्याणां दिग्दक्षिणतः प्रत्युच्छ्रितमिव स्यादेषा वै दिक् पितृणाᳬंᳬं स यद्दक्षिणाप्रवणᳬं स्यात्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति तस्माद्दक्षिणतः प्रत्युच्छ्रितमिव स्यात् ॥ २ ॥

( त्र ) न पुरस्ताद्देवयजनमात्रमतिरिच्येत । द्विषन्तᳬं हास्य तद्भ्रातृव्यमभ्यतिरिच्यते कामᳬं ह दक्षिणतः स्यादेवमुत्तरत एतद्ध त्वेव समृद्धं देवयजनं यस्य देवयजनमात्रं पश्चात्परिशिष्यते क्षिप्रे हैवैनमुत्तरा देवयज्योपनमतीति नु देवयजनस्य ॥ ३ ॥

---

तद्वर्ष्म सत् समं स्यात् । समं सद्–अविभ्रंशि स्यात् । अविभ्रंशि सत् प्राक्प्रवणं स्यात् । प्राची हि देवानां दिक् । अथो उदक्प्रवणम् । उदीची हि मनुष्याणां दिक् । दक्षिणतः प्रत्युच्छ्रितमिव स्यात् । एषा वै दिक् पितृणाम् । स यद्दक्षिणाप्रवणं स्यात्–क्षिप्रे ह यजमानोऽमुं लोकमियात् । अथो ह यजमानो ज्योग्जीवति । तस्माद्दक्षिणतः प्रत्युच्छ्रितमिव स्यात् ॥ २ ॥

न पुरस्ताद्देवयजनमात्रमतिरिच्येत–द्विषन्तं हास्य तद्भ्रातृव्यमभ्यतिरिच्यते । कामं ह दक्षिणतः स्यात्, एवमुत्तरतः । एतद्ध त्वेव समृद्धं देवयजनम्–यस्य देवयजनमात्रं पश्चात्परिशिष्यते । क्षिप्रं हैवैनमुत्तरा देवयज्योपनमति । इति नु देवयजनस्य ॥ ३ ॥

---

त्युपसंहार । अत्र कात्यायनः सौमिकमृत्विग्वरणमभिधायाह–" देवयजन जोषयन्ते, उन्नतसम् " ( का. श्रौ. सू. १० । १० । ११ ) इति ॥ १ ॥

अन्यानपि धर्मविशेषानाह–तद्वर्ष्मेति । ' वर्ष्म ' उन्नतम् ' सद्, ' ' तत् ' देवयजनं ' सम स्यात् ' ; विषमस्य विभ्रंशादर्शनात् तदभावाय तत् समं कर्तव्यमित्यर्थ. । समत्वेन ' अविभ्रंशि ' अपि स्थल प्राचीनप्रवणम् उदीचीनप्रवण वा भवेत्; यष्टव्यत्वेन देवानाम्, यष्टृत्वेन मनुष्याणा च देवयजनसम्बन्धसम्भवादुभयसम्बन्धिन्योर्दिशोरन्यतरस्या. प्रवणत्वाभिधानमित्यभिप्राय. । उदक्प्रवणत्वे यदर्थसिद्ध दक्षिणोन्नतत्वम्, तदाह–दक्षिणतः प्रत्युच्छ्रितमिवेति । विपक्षबाधमुखेन दक्षिणप्रवणत्व निषेधति–एषा वा इति । ' क्षिप्रे ' अचिरेणैव कालेन ' अमु ' परलोकम् । ' तथो ह ' पूर्वोत्तरप्रवणत्वपक्षे ज्योक् चिरकालम् ( आप. श्रौ. सू. १०।२०।११ ) ॥ २ ॥

अथ देवयजनप्राग्देशे देवयजनानन्तरपरिमितप्रदेशस्याधिक्य निषेधति–न पुरस्तादिति । स देशातिरेको यजमानभ्रातृव्यातिरेकाय भवति । तथा चापस्तम्ब:–" न प्राचीन देवयजनाद्देवयजनमात्रमुच्छिंषेत् "– ( आप. श्रौ. सू. १० । २० । १० ) इति । दक्षिणोत्तरयोरतिरेकस्त्वैच्छिक इत्याह–कामं हेति । पश्चाद्भागे पुनरन्यस्य देवयजनस्य पर्याप्तप्रदेशोपेत देवयजनं समृद्धिकरमित्याह–एतद्ध त्वेव समृद्धमिति । प्रतिपाद्यमर्थं निगमयति–इति नु देवयजनस्येति । लक्षणिरिति शेष. । अत्र कात्यायनः–" सममत्यतिभ्रंशि अभितो देवयजनमात्रदेश पुरस्तादूर्ध्वम्, प्राक्प्रवणमुदग्वा " ( का. श्रौ. सू. अ. ७ । ११–१२ ) इति ॥ ३ ॥

---

१–दक्षिणत उन्नतमुदीचीनावनत प्राक्प्रवणं प्रागुदक्प्रवणं वा देवयजनम् इति ।

तदु होवाच याज्ञवल्क्यः । ( स्त्यो ) वार्ष्णाय देवयजनं जोषयितुमैम तत्सात्ययज्ञोऽब्रवीत्सर्व्वा वाऽइयं पृथिवी देवी देवयजनं यत्र वाऽअस्यै क्व च यजुषैव परिगृह्य याजयेदिति ॥ ४ ॥

( स्त्र ) ऋत्विजो हैव देवयजनम् । ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचाना विद्वाꣳसो याजयन्ति सैवाह्वलैतन्नेदिष्ठतमामिव मन्यामहऽइति ॥ ५ ॥

तच्छालां वा विमितं वा प्राचीनवꣳशं मिन्वन्ति । प्राची हि देवानां दिक्पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानुपावृत्तास्तस्मात्तेभ्यः प्राङ्तिष्ठञ्जुहोति ॥ ६ ॥

---

तदु होवाच याज्ञवल्क्यः वार्ष्णाय । देवयजनं जोषयितुमैम । तद् सात्ययज्ञोऽब्रवीत्–'सर्वा वा इयं पृथिवी देवी देवयजनम्, यत्र वा अस्यै क्व च यजुषैव परिगृह्य याजयेत् '–इति ॥ ४ ॥

' ऋत्विजो हैव देवयजनम्–ये ब्राह्मणाः शुश्रुवांसोऽनूचाना विद्वांसो याजयन्ति–सैवाह्वला, एतन्नेदिष्ठतमामिव मन्यामहे–' इति ॥ ५ ॥

तच्छालां वा विमितं वा प्राचीनवंशं मिन्वन्ति । प्राची हि देवानां दिक् । पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानुपावृत्ताः । तस्मात्तेभ्यः प्राङ्तिष्ठञ् जुहोति ॥ ६ ॥

---

अथर्षीणामाख्यानमुखेन देवयजनस्य पक्षान्तरमाह–तदु होवाचेति । वार्ष्णमृषिं ' याज्ञवल्क्य उवाच ' । यदा वयं देवयजनपरिग्रहाय गताः, तदानीं ' सात्ययज्ञः ' आह । " एतावती वै पृथिवी, यावती वेदिः–" इत्यादिश्रुतेः ( तै. सं. २ । ६ । ४ । ३ ) वेद्युपलक्षितदेवयजनस्य देवतात्मकसमस्तपृथिवीरूपत्वम्, अतो 'यत्र क्व च ' मन्त्रेण परिग्रहे सति तदुक्तलक्षणमेव भवेदित्यर्थः ॥ ४ ॥

याज्ञवल्क्यस्तु वक्ष्यमाणलक्षणैर्ऋत्विग्भिः परिग्रहं पूर्वोक्तलक्षणदेवयजनपरिग्रह इत्याह–ऋत्विजो हैवेति । ' शुश्रुवांसः ' श्रुतशास्त्राः । ' अनूचानाः ' साङ्गप्रवचनाध्येतारः । ' अह्वला ' दोषरहिताः । सर्वाधयज्ञस्य परिगृहीतत्वात् । ऋत्विजोऽपि शुभाध्ययनादिसम्पन्ना भवेयुरित्ययमर्थोऽनुक्तो भवेति ॥ ५ ॥

यथोक्तदेवयजने यत्कर्तव्यं गृहं तत्' प्राचीनवंश कर्तव्यमि'त्याह–तच्छालां वेति । ' शाला ' दीर्घचतुरस्रगृहम् । विमितं सर्वतः समपरिमाणम्; अनयोरन्यतरत् ' प्रागंशम् ' प्रागग्रवंश मिनुयात् । प्राग्दिशः प्रशंसार्थमर्थवादमाह–प्राची हीति । यस्मात् प्रत्यङ्मुखान्मनुष्यानुपविशत्यजमानान् प्रति पुरोदेशादविर्भूता देवाः प्रत्यङ्मुखाः, ' तस्मात् ' ' तेभ्यः ' देवेभ्यः ' प्राङ् तिष्ठन् जुहोति ' । तस्मात्प्राचीनवंशत्वमुपपद्यते । ( का. श्रौ. सू. ७ । १९–१८ ) ॥ ६ ॥

---

१–अत्रवीन्मे यजुर्वार्ष्णेयायुजौ भवेति । काण्वश्रुतिः । ( का १४ । ४ । १ । ८ ) यजुर्नामकः । वृष्णस्यापत्यं वार्ष्णः । इति नित्यानन्दमुनिविरचिता मिताक्षरा । तदुह स्माऽऽपि यजुर्वार्ष्णो मातरम्मे यज्ञेति । शतपथी श्रुतिरेव । १४ । १ । १ । १० । वृष्णो नाम कश्चित् । तस्य पुत्रो वार्ष्णः । तस्य नाम यजुरिति सायणाचार्याः ॥ २–' यर्हि व्यानूचानदीक्षः ११ । वहूलेष्वपिमूलेऽपरेऽो विमितं कुर्वीत १४ । प्राग्वंशं १५ । पुरस्तादुन्नतम् १६ । प्रतिदिगुन्नतम् १७ । द्वारयजे वा १८ । शालां वा १९ । ३–विमितपरिमाणं कात्यायनशुल्वपरिशिष्टे । विमितं चतुरस्रं स्यात्दशारत्निप्रमाणतः इति । शालापरिमाणं कात्यायनशुल्वपरिशिष्टे । त्रिदशस्तथा स्यात् शाला स्यात्तदर्धेन तु विस्तृता इति ।

तस्मादु ह न प्रतीचीनशिराः शयीत । नेद्देवानभिप्रसार्य शयाऽइति या दक्षिणा दिक्सा पितॄणां या प्रतीची सा सर्पाणां यतो देवा उच्चक्रमुः सैषाऽहीना योदीची दिक्सा मनुष्याणां तस्मान्मानुषऽउदीचीनवꣳशामेव शालां वा विमितं वा मिन्वन्त्युदीची हि मनुष्याणां दिग्दीक्षितस्यैव प्राचीनवꣳशा नादीक्षितस्य ॥ ७ ॥

तां वाऽएतां परिश्रयन्ति । नेदभिवर्षादिति न्वेव वर्षा देवान्वाऽएषऽउपावर्त्तते यो दीक्षते स देवतानामेको भवति तिरऽइव वै देवा मनुष्येभ्यस्तिरऽइवैतद्यत्परिश्रितं तस्मात्परिश्रयन्ति ॥ ८ ॥

तत्र सर्व्वऽइवाभिप्रपद्येत । ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः ॥ ९ ॥

स वै न सर्व्वेणेव संवदेत । देवान्वाऽएषऽउपावर्त्तते यो दीक्षते स देवतानामेको भवति न वै देवाः सर्व्वेणेव संवदन्ते ब्राह्मणेन वैव राजन्येन वा

---

तस्मादु ह न प्रतीचीनशिराः शयीत । 'नेद्देवानभिप्रसार्य शये'–इति । या दक्षिणा दिक्–सा पितॄणाम् । या प्रतीची–सा सर्पाणाम्–यतो देवा उच्चक्रमुः–सैषाऽहीना । योदीची दिक्–सा मनुष्याणाम् । तस्मान्मानुष उदीचीनवंशामेव शालां वा विमितं वा मिन्वन्ति । उदीची हि मनुष्याणां दिक् । दीक्षितस्यैव प्राचीनवंशाः नादीक्षितस्य ॥ ७ ॥

तां वा एतां परिश्रयन्ति । 'नेदभिवर्षाद्' इति । न्वेव वर्षा । देवान्वा एष उपावर्तते–यो दीक्षते । स देवतानामेको भवति । तिर इव वै देवा मनुष्येभ्यः । तिर इवैतद् यत्परिश्रितम् । तस्मात्परिश्रयन्ति ॥ ८

तत्र सर्व इवाभिप्रपद्येत । ब्राह्मणो वैव राजन्यो वा वैश्यो वा । ते हि यज्ञियाः ॥ ९ ॥

स वै न सर्वेणेव संवदेत । देवान् वा एष उपावर्तते–यो दीक्षते । स देवतानामेको भवति । न वै

---

प्रासङ्गिक दीक्षितस्य शयने कञ्चिन्नियममाह–तस्मादु हेति । 'अभिप्रसार्य' पादावित्यर्थः । प्राग्दिक्प्रशंसार्थं दिग्विभागस्यमर्थवादमाह–या दक्षिणेति । 'यतो' 'देवा' यजमानादीन् प्रति 'उपचक्रमुः' 'सा' प्राची 'अहीना' सम्पूर्णा । उदीच्या मनुष्यसम्बन्धित्वं तेषामुदग्वंशशालानिर्माणात् प्रसिद्धमित्याह–तस्मान्मानुष इति । ( का. श्रौ. सू. ७ । १९ ) 'मानुषे' मनुष्यार्हे कर्मणि । 'दीक्षितस्य' प्राग्वंशत्वमेव, अन्यथा तु उदीचीनवंशत्वमिति व्यवस्था ॥ ७ ॥

सर्वत परिश्रयणं विधत्ते–तां वा एतामिति । वृष्ट्यादिपरिहाराय परिश्रयणं कर्तव्यम्, दीक्षितस्य भाविगत्या देवानां मध्य एकत्वान्मनुष्येभ्यः सकाशाद्देवानां तिरोधानादीक्षणात्परिश्रितत्वस्य च निगूढदर्शनान्तर्हितत्वाद्दीक्षितस्येतरेभ्यो व्यवधानाय च परिश्रयणं कर्तव्यमिति परिश्रयणस्तुतिः । ( आप. श्रौ. सू. १०।५।१ ) ॥८॥

त्रैवर्णिकानां शूद्रादीनामभिप्राप्तिं निषेधति–तत्र सर्व इवाभिप्रपद्येतेति ॥ ९ ॥

दीक्षितस्य सर्वैः सह वाग्व्यवहारं निषेधति–स वै नेति । सर्वशब्दस्य सङ्कोचमाह–ब्राह्मणेन वैवेति ।

वैश्येन वा ते हि यज्ञियास्तस्माद्यद्येनं शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयादिममिति विचक्ष्वेममिति विचक्ष्वेत्येषऽउ तत्र दीक्षितस्योपचारः ॥ १० ॥

(गृह्या) अथारणी पाणौ कृत्वा । शालामध्यवस्यति स पूर्वार्ध्यं स्थूणाराजमभिपद्यैतद्यजुराहेदमगन्म देवयजनं पृथिव्या यत्र देवासोऽअजुषन्त विश्वऽइति तदस्य विश्वैश्च देवैर्जुष्टं भवति ये चेमे ब्राह्मणाः शुश्रुवांसोऽनूचाना यद्धास्य तेऽक्षिभ्यामीक्षन्ते ब्राह्मणाः शुश्रुवांसस्तद्धास्य तैर्जुष्टं भवति ॥ ११ ॥

---

देवाः सर्वेणैव संवदन्ते । ब्राह्मणेन वैव राजन्येन वा वैश्येन वा । ते हि यज्ञियाः । तस्माद्यद्येनं शूद्रेण संवादो विन्देद्—एतेषामेवैकं ब्रूयाद्—'इममिति विचक्ष्व—इममिति विचक्ष्व'—इति । एष उ तत्र दीक्षितस्योपचारः ॥ १० ॥

अथारणी पाणौ कृत्वा, शालामध्यवस्यति । स पूर्वार्ध्यं स्थूणाराजमभिपद्य, एतद्यजुराह—"इदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे"—(वा. सं. ४ । १) इति । तदस्य विश्वैश्च देवैर्जुष्टं भवति, ये चेमे ब्राह्मणाः शुश्रुवांसोऽनूचानाः—यद्धास्य तेऽक्षिभ्यामीक्षन्ते । ब्राह्मणाः शुश्रुवांसः—तद्धास्य तैर्जुष्टं भवति ॥ ११ ॥

---

'तस्माद्' ब्राह्मणादिवर्णत्रयस्य यज्ञार्हत्वाद् । 'यदि' 'शूद्रेण' सह 'संवादो' 'विन्देत्' लभ्येत 'एतेषां' त्रैवर्णिकानां मध्ये 'एकम्,' 'इमम्' शूद्रम् 'इति' एवं संवदानीमुक्तप्रकारेण 'विचक्ष्व ब्रूहीति' 'स्वयं' 'ब्रूयात्' वीप्सया सर्वोऽपि वचनप्रकारः परिगृह्यते । 'एषः' 'उपचारः' व्यवहारः (का. श्रौ. सू. ७ । ९८) ॥ १० ॥

समन्त्रकं शालाप्रवेशं विधत्ते—अथारणी पाणौ कृत्वेति । 'अध्यवस्यति' शालां प्रविश्य मन्त्रेणैतद्देवयजनमिति निश्चिनुयादित्यर्थः । अध्यवसानप्रकारमाह—स पूर्वार्ध्यमिति । 'स्थूणाराजः' मध्ये स्थितः उन्नततमः, तस्य 'पूर्वार्ध्यम्' 'अभिपद्य' गृहीत्वा "इदमगन्म"—इति 'यजुः' ब्रूयात् (आप. श्रौ. सू. १०. ३. ४)। अत्र कात्यायनः—"समारोह्याग्नी शालान्तम पूर्वार्द्धं गृहीत्वारणिपाणिराहेदमगन्मेति"—(का. श्रौ. सू. ७। ३०) इति । मन्त्रस्य द्वितीयं पादं देवशब्दतात्पर्याभिधानेन व्याचष्टे—तदस्य विश्वैरिति श्रुताध्ययनवद्भिर्ब्राह्मणैः । 'अक्षिभ्यां' 'यत्' 'ईक्षन्ते' 'तत्' 'तैः' 'विश्वैर्देवैः' 'जुष्टम्' इत्यर्थः ॥ ११ ॥

---

१—'सर्वोदितः'—इ० पा० । २—अत्र हरिस्वामिनः—पूर्वो भागः शालायाः पूर्वार्द्धः । पूर्वार्द्धे भवः पूर्वार्ध्यः । महती स्थूणा स्थूणराजः । तमभिपद्य प्राप्य हस्तेनालभ्य एतद्यजुराहेति इति ॥ काण्वानां श्रुतिरपि—अथाध्यवस्यति—या शालायाः वरिष्ठा पूर्वार्द्धे शालास्थूणा भवति तामभिपद्य जपतीदमगन्म देवयजनं पृथिव्या इति ॥ आपस्तम्बोऽपि । प्राग्वंशस्य मध्यमं स्थूणाराजमालभ्य जपतीति वाजसनेयकमिति ॥ अतः स्तम्भस्य पूर्वार्द्धमभिपद्येति व्याकृतमयुक्तमिति अवधेयम् ॥

यद्वाह । यत्र देवासोऽअजुषन्त विश्वऽइति तदस्य विश्वैर्देवैर्जुष्टं भवत्यृक्सामाभ्याꣳ संतरन्तो यजुर्भिरित्यृक्सामाभ्यां वै यजुर्भिर्यज्ञस्योदृचं गच्छन्ति यज्ञस्योदृचं गच्छानीत्येवैतदाह रायस्पोषेण समिषा मदेमेति भूमा वै रायस्पोषः श्रीर्वै भूमाऽऽशिषमेवैतदाशास्ते समिषा मदेमेतीषं मदतीति वै तमाहुर्यः श्रियमश्नुते यः परमतां गच्छति तस्मादाह समिषा मदेमेति ॥ १२ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ १ ॥ १ ॥

अपराह्णे दीक्षेत । पुरा केशश्मश्रोर्वपनाद्यत्कामयेत तदश्नीयाद्यद्वा सम्पद्येत व्रतꣳ ह्येवास्यातोऽशनं भवति यद्यु नाशिशिषेदपि कामं नाश्नीयात् ॥ १ ॥ [ शतम् १४०० ] ॥

---

यद्वाह—यत्र देवासो अजुषन्त विश्वे—इति तदस्य विश्वैर्देवैर्जुष्टं भवति । " ऋक्सामाभ्यां सन्तरन्तो यजुर्भिः "—( वा० सं० ४ । १ ) इति । ऋक्सामाभ्यां वै यजुर्भिर्यज्ञस्योदृचं गच्छन्ति । ' यज्ञस्योदृचं गच्छानि ' इत्येवैतदाह । " रायस्पोषेण समिषा मदेम "—( वा० सं० ४ । १ ) इति । भूमा वै रायस्पोषः । श्रीर्वै भूमा । आशिषमेवैतदाशास्ते । समिषा मदेम—इति । इषं मदतीति वै तमाहुः—यः श्रियमश्नुते, यः परमतां गच्छति । तस्मादाह—समिषा मदेमेति ॥ १२ ॥

अथ तत्रादौ दीक्षासंस्काराः ।

अपराह्णे दीक्षेत । पुरा केशश्मश्रोर्वपनाद्—यत्कामयेत—तदश्नीयाद् । यद्वा सम्पद्येत । व्रतं ह्येवास्यातोऽशनं भवति । यद्यु नाशिशिषेद्—अपि कामं नाश्नीयात् ॥ १ ॥

---

यद्वाहेति । तृतीयं पादं व्याचष्टे—ऋक्सामाभ्यामिति । ' यजुर्भिः ' क्रियमाणं यज्ञस्वरूपम् ' ऋक्सामाभ्यां ' स्तोत्रशस्त्राभ्यां ' सन्तरन्तः ' पारं प्रापयन्तः इति मन्त्रभागस्यार्थः । यजुषा ऋक्सामाभ्यां च ये तरन्ति ते यज्ञस्योदृचमेव परिसमाप्तिं गच्छन्ति । अत एतेन यज्ञस्य ' उदृचं ' परिसमाप्तिं प्राप्नुयामीत्युक्तवान् भवति । चतुर्थपादस्य प्रथमभागं व्याचष्टे—रायस्पोषेणेति । ' भूमा ' बहुभाव एव ' रायस्पोषो ' धनपुष्टिः, स च ' भूमा ' साक्षात् ' श्री ' एव तस्माद् ' एतद् ' मन्त्रपाठे ' आशिषम् ' एव आशास्ते । तद्द्वितीयभागस्य तात्पर्यमाह—समिषेति । लोके यः श्रियं परमतां च गच्छति, तम् ' इषम् ' अन्नं ' मदति ' मोदत इत्याहुः; अतो मन्त्रे समिषेति भागमाहेत्यर्थः ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ ३—१—१ ॥

अथ दीक्षाकालं विधत्ते—अपराह्ण इति । ' अपराह्णे अहस्तृतीये भागे ( आप. श्रौ. सू. १०।१२।२। ) ।

---

१—दीक्षान्तकालम् इति पा । इयमप्युदीक्षत्युच्यते—एतद्दीक्षाकालस्तु—अपराह्णे दीक्षेतेति प्रथमकण्डिकायामुक्तः ॥ का. । नापित उपतिष्ठति, नखानि निकृन्तत्यङ्गुष्ठमन्तर्निधाने, दक्षिणहस्तस्य प्रथमलेति । ७ । २६ ।। नापितो उपतिष्ठति समापत्ये सति अङ्गुलेखानि निकृन्तनीयर्थ ।

( द ) अथोत्तरेण शालां परिश्रयन्ति । तदुदकुम्भमुपनिदधाति तन्नापित उपतिष्ठते तत्केशश्मश्रु च वपते नखानि च निकृन्तते ऽस्ति वै पुरुषस्यामेध्यं यत्रास्यापो नोपतिष्ठन्ते केशश्मश्रौ च वा ऽअस्य नखेषु चापो नोपतिष्ठन्ते तद्यत्केशश्मश्रु च वपते नखानि च निकृन्तते मेध्यो भूत्वा दीक्षा ऽइति ॥ २ ॥

तद्धैके । सर्व्व ऽएव वपन्ते सर्व्व ऽएव मेध्या भूत्वा दीक्षिष्यामह ऽइति तदु तथा न कुर्याद्यद्वै केशश्मश्रु च वपते नखानि च निकृन्तते तदेव मेध्यो भवति तस्मादु केशश्मश्रु चैव वपेत नखानि च निकृन्तेत ॥ ३ ॥

स वै नखान्येवाग्रे निकृन्तते । दक्षिणस्यैवाग्रे सव्यस्य वा ऽग्रे मानुषे ऽथैवं देवत्रा ऽङ्गुष्ठयोरेवाग्रे कनिष्ठिकयोर्वा ऽग्रे मानुषे ऽथैवं देवत्रा ॥ ४ ॥

---

अथोत्तरेण शालां परिश्रयन्ति । तदुदकुम्भमुपनिदधाति । तन्नापित उपतिष्ठते । तत्केशश्मश्रु च वपते, नखानि च निकृन्तते । अस्ति वै पुरुषस्यामेध्यं—यत्रास्यापो नोपतिष्ठन्ते । केशश्मश्रौ च वा अस्य नखेषु चापो नोपतिष्ठन्ते—तद्यत् केशश्मश्रु च वपते, नखानि च निकृन्तते—'मेध्यो भूत्वा दीक्षै' इति ॥ २ ॥

तद्धैके—सर्व एव वपन्ते—'सर्व एव मेध्या भूत्वा दीक्षिष्यामहे' इति । तदु तथा न कुर्यात् । यद्वै केशश्मश्रु च वपते, नखानि च निकृन्तते—तदेव मेध्यो भवति । तस्मादु केशश्मश्रु चैव वपेत, नखानि च निकृन्तेत ॥ ३ ॥

स वै नखान्येवाग्रे निकृन्तते दक्षिणस्यैवाग्रे, सव्यस्य वा अग्रे मानुषे । अथैवं देवत्रा । अङ्गुष्ठयोरेवाग्रे, कनिष्ठिकयोर्वा अग्रे मानुषे । अथैवं देवत्रा ॥ ४ ॥

---

अथ दीक्षितस्नानविषये सर्वाङ्गमप्यनुजानाति—यत्कामयेतेत्यादिना । यथेष्टभोजने अवधिमाह—व्रतं ह्येवास्याव इति । 'अतः' अस्मादुक्तभोजनात्पूर्वकाले 'व्रतम्' 'एव' भवतु केवलं पयःपानमेव; अत इदानीं यथेष्टं भुञ्जीत । तथा चापस्तम्बः—"तथाशिनः स्याच्चया तनौ दीक्षासु कर्मसु—कर्मिणो व्रतमुपेयात्" (आप. श्रौ. सू. १०. ६. ७–१०) इति । इच्छयाऽशनासनमनुज्ञापयति—यदीति । कात्यायनः—"अप्सुदीक्षान्ते हविष्यमश्नात् ०–० अपराह्णेऽश्नात्यष्टमुत्तरतो वा न वेति" (का. श्रौ. सू. ७ । १२ । ३३ । ३४) ॥१॥

शालाया उत्तरभागे क्षौरार्थं परिश्रयणं विधत्ते—अथोत्तरेणेति । तत्राभिषुदकुम्भसहिते देशे 'नापितः' निवसेत् । तत्र केशश्मश्रुवपनं नखनिकर्तनं च कुर्यात् । तत्रोदकुम्भस्थापनप्रयोजनमाह—अस्ति वा इति । अमेध्यानां केशनखानां निरवशेषेण मुखच्छेदनात् उदकुम्भसलिलस्नानेन पवित्रमिति निर्णयः (आ. श्रौ. सू. १०।२।६)॥२

सर्वाङ्गवपनमनुमतमस्य निराचष्टे—तद्धैके सर्वं एवेति । सर्वस्मिन्नपि देहे केशादिवपनेनैव प्रायेण कृतस्वसम्पादनमनेनैव सर्वत्रापि मेध्यं भवतीत्यभिप्रायः । अत्र सूत्रम्—"उत्तरे परिश्रित उदकुम्भवपनमु दीक्षा, नापित उपतिष्ठति"—इति ( का. श्रौ. सू. ७।२९।२६ ) ॥ ३ ॥

मानुषवच्छ्यावृत्त्युपन्यासमुखेन नखानामेव, तत्रापि सव्यदक्षिणयोर्हस्तयोरेव तत्राप्यङ्गुष्ठयोरेवेति क्रमतो प्राथम्यमाह—स वै नखान्येवेत्यादिना । 'देवत्रा' देवेषु, देवसम्बन्धिकर्मणि एवं कर्तव्यमिति नर्थः (का.श्रौ.सू.७।२६।२।२६) ॥४॥

स दक्षिणमेवाग्रे गोदानं व्वितारयति । सव्यं वाऽअग्रे मानुषेऽथैवं देवत्रा॥५
स दक्षिणमेवाग्रे गोदानमभ्युनत्ति । ( त्ती ) इमाऽ आपः शमु मे सन्तु देवीरिति स यदाहेमा आपः शमु मे सन्तु देवीरिति व्वज्रो वाऽआपो व्वज्रो हि वाऽआपस्तस्माद्येनैता यन्ति निम्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति तत्तदेतमेवैतद्वज्रꣳ शमयति तथो हैनमेष व्वज्रः शान्तो न हिनस्ति तस्मादाहेमा ऽआपः शमु मे सन्तु देवीरिति ॥ ६ ॥
( त्यु ) अथ दर्भतरुणकमन्तर्दधाति । ( त्यो ) ओषधे त्रायस्वेति व्वज्रो वै क्षुरस्तथो हैनमेष व्वज्रः क्षुरो न हिनस्त्यथ क्षुरेणाभिनिदधाति स्वधिते

---

स दक्षिणमेवाग्रे गोदानं वितारयति । सव्यं वा अग्रे मानुषे । अथैवं देवत्रा ॥ ५ ॥
स दक्षिणमेवाग्रे गोदानमभ्युनत्ति–" इमा आपः शमु मे सन्तु देवीः "–( वा. सं. ४।१।) इति । स यदाह–इमा आपः शमु मे सन्तु देवीरिति । वज्रो वा आपः । वज्रो हि वा आपः तस्माद्–येनैता यन्ति निम्नं कुर्वन्ति, यत्रोपतिष्ठन्ते निर्दहन्ति । तत्तदेतमेवैतद् वज्रं शमयति । तथो हैनमेष वज्रः शान्तो न हिनस्ति । तस्मादाह–इमा आपः शमु मे सन्तु देवीरिति ॥ ६ ॥
अथ दर्भतरुणकमन्तर्दधाति–"ओषधे त्रायस्व"( वा. सं. ४ । १ )इति । वज्रो वै क्षुरः । तथो

---

वपने दक्षिणस्य भागस्य प्राथम्यमाह–स दक्षिणमेवेति । 'गोदान' नाम कर्णस्योपरिप्रदेशः तं 'वितारयति' विभजेत् । यस्य चाग्रे वपनम्, तस्यैव चोन्दनप्राथम्यं युक्तम् ॥ ५ ॥
समन्त्रकं वपनमाह–इमा आप इति । 'आपः शं सन्तु'–इति शान्तिप्रार्थनायाः कौर्यप्रमहं दर्शयति–वज्रो वा आप इति । एतत्प्राग्व्याख्यातम् ( श. प. १।१।१।१७ ) ॥ ६ ॥
क्षुरविदारणपरिहाराय केशानामुपरि दर्भस्थापनं समन्त्रमाह–अथेति । दर्भतरुणकमित्यादि । दर्भपाणिरित्यर्थः (७।३८)। क्षुरस्य हिंसकत्वात् ततः पालनप्रार्थना। तत्र समन्त्रकं क्षुरनिधानमाह–अथ क्षुरेणेति(७।३९)॥ ७

---

१–गोदानञ्च दक्षिणं शिरःपार्श्वम् । गावि पृथिव्यां दीयन्त इति गोदानम् इति का. श्रौ सूत्र ७ । १७ भाष्ये कर्कः ।
२–दक्षिणं गोदानं वितार्योनत्तीमा आपः इति । ७–१७ पूयवाकुशानरुणः १८ क्षुरेण चाभिनिधाय १९ । छिन्त्वोदपात्रे प्रास्यति ४० । एवमुत्तरं तूष्णीं ४१ नापिताय क्षुरं प्रयच्छति ४२ । तेन केशश्मश्रु वपति ४३ । आपो अस्मानिति स्नात्वा ४४ । वितारणं कङ्कतादिना केशोन्मोचनम् । उनत्ति–उन्दी क्लेदने–सिञ्चतीत्यर्थः । गोदानं च–दक्षिणं शिरसः पार्श्वम् । स्वर्गादिर्गौः पृथिव्या दीयते यत्तद्गोदानम् । पूयवदिति–ओषधे त्रायस्वेति मन्त्रातिदेशः । कुशतरुण–सूक्ष्मं कुशाग्रं, दर्भतरुणमिति हरिस्वामिनः । चकारेण पूयवदित्यतिदेशः । तेन च स्वधिते मैनꣳ हिꣳसीरिति मन्त्रातिदेशः । केशाः शिरोगताः । तथाहामरसिंहः–' चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ' इति । श्मश्रु मुखजरोमाणि । तथाहामरसिंह –' तनूरुहं रोमलोमनन्तद्वृद्धौ श्मश्रु पुंमुखे ' इति । तानि च भ्रूचक्षुर्गतरोमाणि वर्जयित्वेति देवयाज्ञिकः । मुखलक्षणमायुर्वेदे–' ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च । गलो गलादिसकलं सप्ताङ्गं मुखमुच्यते ' इति । इत्यर्थेलाभसेकमोदकेन स्नानमिति कर्कः । कर्कोक्तिनैकदेशः–स्थावराप्सु स्नाति शङ्खिनीष्वशंकिनीषु लोमशे तीर्थे कुड्ये हिरण्यमवधाय तस्मिन् स्नाति वाजसनेयकमित्यापस्तम्बोक्तादिनियम । तथा देवयाज्ञिकोक्त–वपनानिमित्तस्नानमयुक्तमिति–इष्टे फले सम्भवति नादृष्टकल्पना–इति न्यायाननुगतमेव । एवमुद्देशान्य इति मन्त्रलिङ्गविरोधो न हि स्नानमन्त्रगतः । मन्त्रान्तरगतत्वाचेत्यपि बोध्यम् । एवं च कर्कस्यापि आचार्यसूत्रकर्मोदकस्नानविधानमेवेति सिद्धम् ॥

मैनꣳ हिꣳसीरिति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्ति ॥७॥

प्रच्छिद्योदपात्रे प्रास्यति । तूष्णीमेवोत्तरं गोदानमभ्युनत्ति तूष्णीं दर्भतरुणकमन्तर्दधाति तूष्णीं क्षुरेणाभिनिधाय प्रच्छिद्योदपात्रे प्रास्यति ॥८॥

( त्य ) अथ नापिताय क्षुरं प्रयच्छति । स केशश्मश्रु वपति स यदा केशश्मश्रु वपति ॥ ९ ॥

( त्य ) अथ स्नाति । ( त्य ) अमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वाऽआपो मेध्यो भूत्वा दीक्षाऽइति पवित्रं वाऽआपः पवित्रपूतो दीक्षाऽइति तस्माद्वै स्नाति ॥ १० ॥

स स्नाति । ( त्या ) आपोऽअस्मान्मातरः शुन्धयन्त्वित्येतद्ध्याह शुन्धयन्त्विति घृतेन नो घृतप्वः पुनन्त्विति तद्वै सुपूतं यं घृतेन पुनंस्तस्मादाह घृतेन नो घृतप्वः पुनन्त्विति विश्वꣳ हि रिप्रं प्रवहन्ति देवीरिति यद्वै विश्वꣳ सर्वं तद्यदमेध्युꣳ रिप्रं तत्सर्वꣳ ह्यस्मादमेध्यं प्रवहन्ति तस्मादाह विश्वꣳ हि रिप्रं प्रवहन्ति देवीरिति ॥ ११ ॥

---

हैनमेष वज्रः क्षुरो न हिनस्ति । अथ क्षुरेणाभिनिदधाति । " स्वधिते मैनं हिंसीः " ( वा. सं. ४।१ ) इति । वज्रो वै क्षुरः, तथो हैनमेष वज्रः क्षुरो न हिनस्ति ॥ ७ ॥

प्रच्छिद्योदपात्रे प्रास्यति । तूष्णीमेवोत्तरं गोदानमभ्युनत्ति । तूष्णीं दर्भतरुणकमन्तर्दधाति । तूष्णीं क्षुरेणाभिनिधाय प्रच्छिद्योदपात्रे प्रास्यति ॥ ८ ॥

अथ नापिताय क्षुरं प्रयच्छति । स केशश्मश्रु वपति स यदा केशश्मश्रु वपति ॥ ९ ॥

अथ स्नाति । अमेध्यो वै पुरुषो—यदनृतं वदति । तेन पूतिरन्तरतः । मेध्या वा आपः । ' मेध्यो भूत्वा दीक्षै '—इति । पवित्रं वा आपः । ' पवित्रपूतो दीक्षै 'इति । तस्माद्वै स्नाति ॥ १० ॥

स स्नाति—" आपो अस्मान्मातरः शुन्धयन्तु "( वा. सं. ४ । २ ) इति । एतद्ध्याह शुन्धयन्त्विति "घृतेन नो घृतप्वः पुनन्तु"—( वा. सं. ४।२ ) इति । तद्वै सुपूतं—यं घृतेनपुनंस्त-

---

प्रच्छिद्येति स्पष्टम् ( ७।४० ) । उत्तरं गोदानोन्दनादिकममन्त्रकमित्याह—तूष्णीमेवेति ( ७।४१ ) ॥ ८ ॥

अथ नापितायेति । स्पष्टम् ( ७ । ४०–४२ ) ॥ ९ ॥

स्नानं विधाय प्रशंसति—अथ स्नातीति । एतद्ब्राह्मणोक्तार्थवादवाक्यवद् व्याख्येयम् ॥ १० ॥

स्नानमन्त्रमाह—स स्नातीत्यादिना । आपो अस्मानिति (७।४४) । 'मातरः ' ओषधिवनस्पत्यादिसकलनिर्मात्र्यः 'घृतेन' पावयन्ति, तस्यैव शुद्धत्वाद् घृतेन पुनन्त्विति प्रार्थनं युक्तमित्यर्थः । तृतीयपादस्य तात्पर्यमाह—विश्वं हीति । "रिप्रो रिप्रमिति । पापनामनी भवतः " इति निरुक्तम् ४।३।५। ' यद् विश्व ' तत् सर्वमुच्यते, ' यदमेध्यम् ' ' तत रिप्रम् ' अतो देहगतं मालिन्यमात्मगतं पापं सर्वं दीक्षमाना आपः ' अस्माद् ' यजमानाद् अपगमयन्ति यतः, अत एवमाह मन्त्र इत्यर्थः ॥ ११ ॥

(त्य) अथ प्राङिवोदङ्ङुत्क्रामति । (त्यु) उदिदाभ्यः शुचिरा पूत एमीत्युद्ध्याभ्यः शुचिः पूत एति ॥ १२ ॥

(त्य) अथ वासः परिधत्ते । सर्वत्वायैव स्वामेवास्मिन्नेतत्त्वचं दधाति या ह वाऽइयं गोस्त्वक्पुरुषे हैषाऽग्रऽआस ॥ १३ ॥

ते देवा अब्रुवन् । (न्यौ) गौर्वाऽइदꣳ सर्वं बिभर्ति हन्त येयं पुरुषे त्वग्गव्येतां दधाम तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षिष्यतऽइति ॥ १४ ॥

तेऽवच्छाय पुरुषम् । गव्येतां त्वचमदधुस्तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षते ॥ १५ ॥

(तेऽव) अवच्छितो हि वै पुरुषः । (स्त) तस्मादस्य यत्रैव क्व च कुशो

---

स्याद्दाह घृतेन नो घृतप्वः पुनन्त्विति । "विश्वं हि रिप्रं प्रवहन्ति देवीः" (वा. सं. ४।२) इति । यद्वै विश्वं—सर्वं तत् । यदमेध्यं रिप्रं तत् । सर्वं—ह्यस्मादमेध्यं प्रवहन्ति । तस्मादाह—विश्वं हि रिप्रं प्रवहन्ति देवीरिति ॥ ११ ॥

अथ प्राङिवोदङ्ङुत्क्रामति- "उदिदाभ्यः शुचिरापूत एमि"-(वा. सं. ४।२) इति । उद्ध्याभ्यः शुचिः पूत एति ॥ १२ ॥

अथ वासः परिधत्ते सर्वत्वायैव । स्वामेवास्मिन्नेतत्त्वचं दधाति । या ह वा इयं गोस्त्वक्—पुरुषे हैषाऽग्र आस ॥ १३ ॥

ते देवा अब्रुवन्—गौर्वा इदं सर्वं बिभर्ति । हन्त येयं पुरुषे त्वक्—गव्येतां दधाम । तयैषा वर्षन्तम् । तया हिमम् । तया घृणिम्, तितिक्षिष्यत इति ॥ १४ ॥

तेऽवच्छाय पुरुषं गव्येतां त्वचमदधुः । तयैषा वर्षन्तम्, तया हिमम्, तया घृणिम्, तितिक्षते ॥ १५ ॥

अवच्छितो हि वै पुरुषः । तस्मादस्य यत्रैव क्व च कुशो वा यद्वा विकृन्तति तत एव लोहितमुत्पतति ।

---

उदिदाभ्य इति चरमपादस्य पृथक् विनियोगमाह—अथ प्राङिवोदङ्ङुत्क्रामतीति । 'आभ्यः' अद्भ्यः सकाशात् शुद्ध एव सन् उद्गच्छामीति तदर्थः ॥ १२ ॥

वास परिधानं विधाय प्रशंसति—अथ वास इति (का. श्रौ. सू. ७।४।९) । 'परिधानम्' उपसंव्यानम्, तद्वारेण सर्वस्यैव दीक्षितस्य 'सर्वत्वायैव' न त्वतिरिक्तः कश्चिद्विशेषोऽस्तीत्येवकारेणाह । अतो वासोधारणेन 'त्वचमेव' कृतवान् भवति यस्मात् तत एतद्धारणवतः सर्वत्वमित्यर्थः । उपरितनग्रन्थः सर्वोऽप्येतस्यैवोपपादकः । इदानीं गव्याश्रिता 'इय' त्वक् 'अग्रे' पुरा 'पुरुषे' 'आस' स्थिता ॥ १३ ॥

ते देवा इति । 'देवा' निमर्थमिय त्वक् पुरुषे वर्तते, गोषु बहूपकारवती,—अतस्तां त्वचं तत आदाय गवि स्थापयामो वृष्टिहिमादिकं परिहरत्विति पुरुषाद् गवि अधारयन् ॥ १४ ॥ १५ ॥

अवच्छित इति । पुरुषादपगमे लिङ्गमाह—तस्मादस्येति । कुशाद्युपघाते सति रक्तस्यादर्शनाद् देवैस्त्वचो,

---

१-उदिदाभ्य इत्युत्क्रामत्युत्तरपूर्वार्द्धम् । का. श्रौ. सू. ७।४।४। २-अस्मात्त्वच एव धारणमत सर्वत्वमित्यर्थः । इ० क० ।

वा श्रद्धा विकृन्तति तत एव लोहितमुत्पतति तस्मिन्नेतां त्वचमदधुर्वास एव तस्मान्नान्यः पुरुषाद्वासो बिभर्त्त्येताᳬं ह्यस्मिँस्त्वचमदधुस्तस्मादु सुवासा एव बुभूषेत्स्वया त्वचा समृध्याऽइति तस्मादप्यश्लीलᳬं सुवाससं दिदृक्षन्ते स्वया हि त्वचा समृद्धो भवति ॥ १६ ॥

नो हान्ते गोर्नग्नः स्यात् । ( वे ) वेद ह गौरहमस्य त्वचं बिभर्मीति सा बिभ्यती त्रसति त्वचं मऽआदास्यतऽइति तस्मादु गावः सुवाससमुपैव निश्रयन्ते ॥ १७ ॥

तस्य वाऽएतस्य वाससः । ( सोऽग्नेः ) अग्नेः पर्यासो भवति वायोरनुच्छादो नीविः पितॄणाᳬं सर्पाणां प्रघातो विश्वेषां देवानां तन्तव आरोका नक्षत्राणामेवᳬं हि वाऽएतत्सर्वं देवा अन्वायत्तास्तस्माद्दीक्षितवसनं भवति ॥ १८ ॥

---

तस्मिन्नेतां त्वचमदधुः—वास एव । तस्मान्नान्यः पुरुषाद्वासो बिभर्ति । एतां ह्यस्मिंस्त्वचमदधुः । तस्माद्ध सुवासा एव बुभूषेत—स्वया त्वचा समृध्ये इति । तस्मादप्यश्लीलं सुवाससं दिदृक्षन्ते । स्वया हि त्वचा समृद्धो भवति ॥ १६ ॥

नो हान्ते गोर्नग्नः स्यात् । वेद ह गौः अहमस्य त्वचं बिभर्मीति । सा बिभ्यती त्रसति त्वचं म आदास्यते' इति । तस्माद्ध गावः सुवाससमुपैव निश्रयन्ते ॥ १७ ॥

तस्य वा एतस्य वाससः । अग्नेः पर्यासो भवति, वायोरनुच्छादः, नीविः पितॄणाम्, सर्पाणां प्रघातः,

---

त्रिकर्तनं सिद्धमित्यर्थः । तदा पुरुषाणां निस्त्वक्त्वपरिहाराय वस्त्रमकल्पयन् । तस्मात्तेषामेवासाधारणमभूत् । सृतेन च सम्भूषितो भवति । तथा च लौकिका आहुः—'वस्त्रं पुरुषस्यालङ्कारः' इति लोके निन्दितमपि सुवाससं समाजादौ सम्यक् पश्यन्ति ॥ १६ ॥

पुरुषस्य त्वचो गवि स्थापनं यदस्ति, तत्किमर्थमिति प्रसङ्गात् कश्चित् कश्चित् पुरुषार्थनियममाह—नो हान्त इति । कदाचिदपि गोसमीपे विवासा न भवेत् । यस्मात्तु मा 'अस्य त्वच' धारयामीति जानीतेत्यतो 'न नग्नः स्यात्' । जानातु नाम का हानिरित्यत आह—सा बिभ्यतीति । पुनस्त्वगपच्छेदभयात् 'त्रसति' भीत्या कम्पते । तस्मादिति । स्पष्टम् ॥ १७ ॥

विहितं वस्त्रं सर्वदेवतात्मकत्वेन प्रशंसति—तस्य वा इति । 'तस्य' वस्त्रस्य, परितः तिर्यक् अस्यत इति 'पर्यासः' तिर्यक्तन्तुसन्दर्भः । सः 'अग्नेर्भवति' अग्निदेवताको भवति, सोऽग्निमन्यत इत्यर्थः । 'अनुच्छादः' अनुलोममाच्छादन इति । सः 'वायोः' भवति । 'नीवि' आद्यन्तप्रदेशः । स 'पितॄणाम्' । 'प्रघातः' सर्वहननस्थानं निबिडीभूतप्रदेशः । स. 'सर्पाणाम्' । 'तन्तवः' स्वरूपेण, 'विश्वेषां देवानाम्' । 'आरोकाः' मध्यच्छिद्राणि । तत् 'नक्षत्राणाम्' । 'तस्मात्' सकलदेवत्यत्वात् 'दीक्षितवसनम्' अवश्यं भवितव्यम् ॥ १८ ॥

---

१—"प्रघातो दण्डेन शलाकोपघातेन वा प्रहारः" इति तै. स. १।२।१,६।१।१ सा. भा. । २—"मध्ये छिद्राणि" ह० पा. ।

